॥ भगवतीपद्यपुष्पांजलिस्तोत्रं अथवा महिषासुरमर्दिनिस्तोत्रम् ॥

श्री भगवत्यै नमः ॥

भगवति भगवत्पदपङ्कजं भ्रमरभूतसुरासुरसेवितम् ।
सुजनमानसहंसपरिस्तुतं कमलयाऽमलया निभृतं भजे ॥ १॥

ते उभे अभिवन्देऽहं विघ्नेशकुलदैवते ।
नरनागाननस्त्वेको नरसिंह नमोऽस्तुते ॥ २॥

हरिगुरुपदपद्मं शुद्धपद्मेऽनुरागाद्-
विगतपरमभागे सन्निधायादरेण ।
तदनुचरि करोमि प्रीतये भक्तिभाजां
भगवति पदपद्मे पद्यपुष्पाञ्जलिं ते ॥ ३॥

केनैते रचिताः कुतो न निहिताः शुम्भादयो दुर्मदाः
केनैते तव पालिता इति हि तत् प्रश्ने किमाचक्ष्महे ।
ब्रह्माद्या अपि शंकिताः स्वविषये यस्याः प्रसादावधि
प्रीता सा महिषासुरप्रमथिनी च्छिन्द्यादवद्यानि मे ॥ ४॥

पातु श्रीस्तु चतुर्भुजा किमु चतुर्बाहोर्महौजान्भुजान्
धत्तेऽष्टादशधा हि कारणगुणाः कार्ये गुणारम्भकाः ।
सत्यं दिक्पतिदन्तिसंख्यभुजभृच्छम्भुः स्वयम्भूः स्वयं
धामैकप्रतिपत्तये किमथवा पातुं दशाष्टौ दिशः ॥ ५॥

प्रीत्याऽष्टादशसंमितेषु युगपद्द्वीपेषु दातुं वरान्
त्रातुं वा भयतो बिभर्षि भगवत्यष्टादशैतान् भुजान् ।
यद्वाऽष्टादशधा भुजांस्तु बिभृतः काली सरस्वत्युभे
मीलित्वैकमिहानयोः प्रथयितुं सा त्वं रमे रक्ष माम् ॥ ६॥

छन्दः ॥

अयि गिरिनंदिनि नंदितमेदिनि विश्वविनोदिनि नंदनुते
गिरिवरविंध्यशिरोधिनिवासिनि विष्णुविलासिनि जिष्णुनुते ।
भगवति हे शितिकण्ठकुटुंबिनि भूरिकुटुंबिनि भूरिकृते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥ १॥ ॥ ७॥

सुरवरवर्षिणि दुर्धरधर्षिणि दुर्मुखमर्षिणि हर्षरते

त्रिभुवनपोषिणि शंकरतोषिणि किल्बिषमोषिणि घोषरते ।
दनुजनिरोषिणि दितिसुतरोषिणि दुर्मदशोषिणि सिन्धुसुते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥ २॥ ॥ ८॥

अयि जगदंब मदंब कदंबवनप्रियवासिनि हासरते
शिखरिशिरोमणितुङ्गहिमालयशृंगनिजालयमध्यगते ।
मधुमधुरे मधुकैटभगंजिनि कैटभभंजिनि रासरते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥ ३॥ ॥ ९॥

अयि शतखण्डविखण्डितरुण्डवितुण्डितशुण्डगजाधिपते
रिपुगजगण्डविदारणचण्डपराक्रमशुण्ड मृगाधिपते ।
निजभुजदण्डनिपातितखण्डनिपातितमण्डभटाधिपते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥ ४॥ ॥ १०॥

अयि रणदुर्मदशत्रुवधोदितदुर्धरनिर्जरशक्तिभृते
चतुरविचारधुरीणमहाशिवदूतकृतप्रमथाधिपते ।
दुरितदुरीहदुराशयदुर्मतिदानवदूतकृतांतमते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥ ५॥ ॥ ११॥

अयि शरणागतवैरिवधूवरवीरवराभयदायकरे
त्रिभुवनमस्तकशूलविरोधिशिरोधिकृतामलशूलकरे ।
दुमिदुमितामरदुंदुभिनादमहोमुखरीकृततिग्मकरे
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥ ६॥ ॥ १२॥

अयि निजहुँकृतिमात्रनिराकृतधूम्रविलोचनधूम्रशते
समरविशोषितशोणितबीजसमुद्भवशोणितबीजलते ।
शिवशिव शुंभनिशुंभमहाहवतर्पितभूतपिशाचरते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥ ७॥ ॥ १३॥

धनुरनुसंगरणक्षणसंगपरिस्फुरदंगनटत्कबके
कनकपिशंगपृषत्कनिषंगरसद्भटशृंगहतावटुके ।
कृतचतुरङ्गबलक्षितिरङ्गघटद्बहुरङ्गरटद्बटुके
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥ ८॥॥ १४॥

सुरललनाततथेयितथेयितथाभिनयोत्तरनृत्यरते
हासविलासहुलासमयि प्रणतार्तजनेऽमितप्रेमभरे ।
धिमिकिटधिक्कटधिकटधिमिध्वनिघोरमृदंगनिनादरते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥ ९॥ ॥ १५॥

जय जय जप्यजये जयशब्दपरस्तुतितत्परविश्वनुते
झणझणझिञ्जिमिझिंकृतनूपुरसिंजितमोहितभूतपते ।
नटितनटार्धनटीनटनायकनाटितनाट्यसुगानरते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥ १०॥ ॥ १६॥

अयि सुमनःसुमनः सुमनः सुमनः सुमनोहरकांतियुते
श्रितरजनीरजनीरजनीरजनीरजनीकरवक्त्रवृते ।
सुनयनविभ्रमरभ्रमरभ्रमरभ्रमरभ्रमराधिपते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥ ११॥ ॥ १७॥

सहितमहाहवमल्लमतल्लिकमल्लितरल्लकमल्लरते
विरचितवल्लिकपल्लिकमल्लिकझिल्लिकभिल्लिकवर्गवृते ।
सितकृतफुल्लिसमुल्लसितारुणतल्लजपल्लवसल्ललिते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥ १२॥ ॥ १८॥

अविरलगण्डगलन्मदमेदुरमत्तमतङ्गजराजपते
त्रिभुवनभूषणभूतकलानिधिरूपपयोनिधिराजसुते ।
अयि सुदती जनलालसमानसमोहनमन्मथराजसुते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥ १३॥ ॥ १९॥

कमलदलामलकोमलकांतिकलाकलितामलभाललते
सकलविलासकलानिलयक्रमकेलिचलत्कलहंसकुले ।
अलिकुलसङ्कुलकुवलयमण्डलमौलिमिलद्बकुलालिकुले
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥ १४॥ ॥ २०॥

करमुरलीरववीजितकूजितलज्जितकोकिलमञ्जुमते
मिलितपुलिन्दमनोहरगुञ्जितरञ्जितशैलनिकुञ्जगते ।
निजगुणभूतमहाशबरीगणसद्गुणसंभृतकेलितले
variation निजगणभूतमहाशबरीगणरङ्गणसम्भृतकेलिरते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥ १५॥ ॥ २१॥

कटितटपीतदुकूलविचित्रमयूखतिरस्कृतचंद्ररुचे
प्रणतसुरासुरमौलिमणिस्फुरदंशुलसन्नखचंद्ररुचे ।
जितकनकाचलमौलिपदोर्जितनिर्झरकुंजरकुंभकुचे
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥ १६॥ ॥ २२॥

विजितसहस्रकरैकसहस्रकरैकसहस्रकरैकनुते

कृतसुरतारकसङ्गरतारकसङ्गरतारकसूनुसुते ।
सुरथसमाधिसमानसमाधिसमाधिसमाधिसुजातरते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥ १७॥ ॥ २३॥

पदकमलं करुणानिलये वरिवस्यति योऽनुदिनं स शिवे
अयि कमले कमलानिलये कमलानिलयः स कथं न भवेत् ।
तव पदमेव परंपदमेवमनुशीलयतो मम किं न शिवे
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥ १८॥ ॥ २४॥

कनकलसत्कलसिन्धुजलैरनुसिञ्चिनुते गुण रङ्गभुवं
भजति स किं न शचीकुचकुंभतटीपरिरंभसुखानुभवम् ।
तव चरणं शरणं करवाणि नतामरवाणिनिवासि शिवं
variation  मृडानि सदा मयि देहि शिवं
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥ १९॥ ॥ २५॥

तव विमलेन्दुकुलं वदनेन्दुमलं सकलं ननु कूलयते
किमु पुरुहूतपुरीन्दुमुखीसुमुखीभिरसौ विमुखीक्रियते ।
मम तु मतं शिवनामधने भवती कृपया किमुत क्रियते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥ २०॥ ॥ २६॥

अयि मयि दीनदयालुतया कृपयैव त्वया भवितव्यमुमे
अयि जगतो जननी कृपयासि यथासि तथाऽनुमितासि रते ।
यदुचितमत्र भवत्युररीकुरुतादुरुतापमपाकुरुते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥ २१॥ ॥ २७॥

स्तुतिमितस्तिमितः सुसमाधिना नियमतोऽयमतोऽनुदिनं पठेत् ।
परमया रमयापि निषेव्यते परिजनोऽरिजनोऽपि च तं भजेत् ॥ २८॥

रमयति किल कर्षस्तेषु चित्तं नराणामवरजवरयस्माद्रामकृष्णः कवीनाम् ।
अकृत सुकृतिगम्यं रम्यपद्यैकहर्म्यं स्तवनमवनहेतुं प्रीतये विश्वमातुः ॥ २९॥

इन्दुरम्यो मुहुर्बिन्दुरम्यो मुहुर्बिन्दुरम्यो यतः साऽनवद्यं स्मृतः ।
श्रीपतेः सूनूना कारितो योऽधुना विश्वमातुः पदे पद्यपुष्पाञ्जलिः ॥ ३०॥

इति श्रीभगवतीपद्यपुष्पाञ्जलिस्तोत्रम् सम्पूर्णम्॥